इति । मृषा मिथ्या । नैतद्धर्माय, यतस्तावन्मात्रेणाप्यसौ विक्रय इत्यर्थः । देवलस्तु न गोमिथुनं शुल्कमित्याह—

एवं[1] विवाहाश्चत्वारो धर्म्याश्श्रेयःप्रदायकाः[2] ।
अशुल्का ब्राह्मणाद्यर्हास्ततो यान्ति द्वयोः कुलम्[3] ॥

इति । एवं च ब्राह्मणस्य आसुरगान्धर्वौ प्रशस्तविवाहालाभे वेदितव्यौ । एवं क्षत्रियादेरपि द्रष्टव्यम् । यत्तु काश्यपेनोक्तं—

क्रीता द्रव्येण या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न पित्र्ये च दासीं तां कश्यपोऽब्रवीत् ॥

इति, तत्प्रशस्तविवाहसम्भवविषयम् । यदप्यत्र प्रशस्तविवाहाभिप्रायेण मनुनोक्तं—

दुर्विवाहैः क्रियालोपैः वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मण्यातिक्रमेण च[4] ॥

इति, तदपि पूर्वोक्तेन समानविषयम् । तथा शुल्कादानेऽपि स एव दोषमाह—

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णंछुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥
नानुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥

---

[1] पूर्वे ; [2] स्तोयप्रधानिकाः ; [3] ब्राह्मणार्हाश्च तारयन्ति कुलद्वयम्— वैद्य.
[4] नैष श्लोको मुद्रितायां मनुस्मृतौ.

यमोऽपि—

> यो मनुष्यो मनुष्यस्य विक्रयाद्धनमिच्छति ।
> तस्य मूत्रं पुरीषं च स परत्रोपजीवति ॥
> कन्याविक्रयिणो मूर्खा इह किल्बिषकारिणः ।
> पतन्ति नरके घोरे दहत्या सप्तमं कुलम् ॥

इति । एतदात्मार्थं धनग्रहणे वेदितव्यम् । कन्यार्थे तु न दोष इत्याह मनुः—

> यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
> अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् ॥

इति । यच्छुल्कं कन्यार्थं तत्कुमारीणां केवलमर्हणं पूजनमित्यर्थः। आनृशंस्यमपापित्वम् । अत्र यज्ञपार्श्वः—

> विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
> कन्याया ऋतुरागच्छेत्कथं कुर्वन्ति याज्ञिकाः ॥
> स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
> युञ्जान आहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् ॥

इति श्रीसकलविद्याविशारदकेशवादित्यभट्टोपाध्यायसूनुयाज्ञिक-देवणभट्टोपाध्यायविरचितायां स्मृतिचन्द्रिकायां विवाहप्रकरणम्.

समाप्तस्संस्कारकाण्डः.

